ॐ

# श्री बहुरूपगर्भस्तोत्रम्

---

मखनलाल कोकिलविरचित-
श्री पादुका पुष्प माला सहितम्

---




श्रीनगर,
काश्मीर

विक्र० सं० २०२६



स्वच्छन्दनाथ जी

## दो शब्द

जिनकी पावनतम पादुकाओं का प्रातः स्मरण करने मात्र से ही भक्तजनों के समस्त पापों का प्रक्षालन होता है, उन्हीं गुरुवर्य शैवरूप श्री स्वामी ईश्वर-स्वरूप जी की आज्ञा से दो शब्द लिखने का सौभाग्य मुझे प्राप्त हुआ।

जो बहुरूपगर्भस्तोत्र पहले कश्मीर में छपा था उसमें अनेक त्रुटियां थीं वह मैंने यथासम्भव शुद्ध की हैं, और इसके साथ ही हमारे स्वामीजी के एक विद्वान शिष्य श्री मखन लाल कोकिल ने श्रीपादुका पुष्पमाला लिखी है, वह भी हमने छापी है। एवं श्री रामेश्वराचार्य जी के द्वारा विरचित श्रीगुरु-स्तुति भी सम्बन्धित है। इसके अतिरिक्त कश्मीरी भाषा में मेरी माता कमला देवी भागाती ने भी गुरु सम्बन्धी भाव पोष की रचना की है। मुझे आशा है कि यह पुस्तक हमारे गुरुदेव के भक्तों को आह्लादित करेगी।

**शीला मुन्शी**

ॐ

## नमः स्वच्छन्दभैरवाय ।

त्रिपञ्चनयनं देवं जटामुकुटमण्डितम् ।
चन्द्रकोटिप्रतीकाशं चन्द्रार्धकृतशेखरम् ॥१॥

पञ्चवक्त्रं विशालाक्षं सर्पगोनासमण्डितम् ।
वृश्चिकैरग्निवर्णाभैर्हारेण तु विराजितम् ॥२॥

कपालमालाभरणं खड्गखेटकधारिणम् ।
पाशाङ्कुशधरं देवं शरहस्तं पिनाकिनम् ॥३॥

वरदाभयहस्तं च मुण्डखट्वाङ्गधारिणम् ।
वीणाडमरुहस्तं च घण्टाहस्तं त्रिशूलिनम् ॥४॥

वज्रदण्डकृपाटोपं परश्वायुधहस्तकम् ।
मुद्गरेण विचित्रेण वर्तुलेन विराजितम् ॥५॥

सिंहचर्मपरीधानं गजचर्मोत्तरीयकम् ।
अष्टादशभुजं देवं नीलकण्ठं सुतेजसम् ॥६॥

ऊर्ध्ववक्त्रं महेशानि स्फटिकाभं विचिन्तयेत् ।
आपीतं पूर्ववक्त्रं तु नीलोत्पलदलप्रभम् ॥७॥

दक्षिणं तु विजानीयाद्वामं चैव विचिन्तयेत् ।
दाडिमीकुसुमप्रख्यं कुङ्कुमोदकसंनिभम् ॥८॥

चन्द्रार्बुदप्रतीकाशं पश्चिमं तु विचिन्तयेत् ।
स्वच्छन्दभैरवं देवं सर्वकामफलप्रदम् ॥९॥

ध्यायते यस्तु युक्तात्मा क्षिप्रं सिध्यति मानवः ।
या सा पूर्वं मया ख्याता अघोरी शक्तिरुत्तमा ॥१०॥

भैरवं पूजयित्वा तु तस्योत्सङ्गे तु तां न्यसेत् ।
यादृशं भैरवं रूपं भैरव्यास्तादृगेव हि ॥११॥

ईषत्करालवदनां गम्भीरविपुलस्वनाम् ।
प्रसन्नास्यां सदा ध्यायेद्भैरवीं विस्मितेक्षणाम् ॥१२॥

ॐ

श्रीबहुरूपगर्भस्तोत्रम् ।

ॐ नमः स्वच्छन्दभैरवाय ।



ब्रह्मादिकारणातीतं स्वशक्त्यानन्दनिर्भरम् ।
नमामि परमेशानं स्वच्छन्दं वीरनायकम् ॥१॥

कैलासशिखरासीनं देवदेवं जगद्गुरुम् ।
पप्रच्छ प्रणता देवी भैरवं विगतामयम् ॥२॥

## श्रीदेव्युवाच

प्रायश्चित्तेषु सर्वेषु समयोल्लङ्घनेषु च ।
महाभयेषु घोरेषु तीव्रोपद्रवभूमिषु ॥३॥

छिद्रस्थानेषु सर्वेषु सदुपायं वद प्रभो ।
येनायासेन रहितो निर्दोषश्च भवेन्नरः ॥४॥

## श्रीभैरव उवाच

शृणु देवि परं गुह्यं रहस्यं परमाद्भुतम् ।
सर्वपापप्रशमनं सर्वदुःखनिवारणम् ॥५॥

प्रायश्चित्तेषु सर्वेषु तीव्रेष्वपि विमोचनम् ।
सर्वछिद्रापहरणं सर्वार्तिविनिवारकम् ॥६॥

समयोल्लङ्घने घोरे जपादेव विमोचनम् ।
भोगमोक्षप्रदं देवि सर्वसिद्धिफलप्रदम् ॥७॥

शतजाप्येन शुद्ध्यन्ति महापातकिनोऽपि ये ।
तदर्धं पातकं हन्ति तत्पादेनोपपातकम् ॥८॥

कायिकं वाचकं चैव मानसं स्पर्शदोषजम् ।
प्रमादादिच्छया वापि सकृज्जाप्येन शुद्ध्यति ॥९॥

यागारम्भे च यागान्ते पठितव्यं प्रयत्नतः ।
नित्ये नैमित्तिके काम्ये परस्याप्यात्मनोऽपि वा ॥१०॥

निश्छिद्रकरणं प्रोक्तं स्वभावपरिपूरणम् ।
द्रव्यहीने मन्त्रहीने यज्ञयोगविवर्जिते ॥११॥

भक्तिश्रद्धाविरहिते शुद्धिशून्ये विशेषतः ।
मनोविक्षेपदोषे च विलोपे पशुवीक्षिते ॥१२॥

विधिहीने प्रमादे च जप्तव्यं सर्वकर्मसु ।
नातः परतरो मन्त्रो नातः परतरा स्तुतिः ॥१३॥

नातः परतरा काचित्सम्यक्प्रत्यङ्गिरा प्रिये ।
इयं समयविद्यानां राजराजेश्वरीश्वरि ।।१४।।

परमाप्यायनं देवि भैरवस्य प्रकीर्तितम् ।
प्रीणनं सर्वदेवानां सर्वसौभाग्यवर्धनम् ।।१५।।

स्तवराजमिमं पुण्यं शृण्वष्वावहिता प्रिये ।।१६।।

अस्य श्रीबहुरूपभट्टारकस्तोत्रस्य, श्रीवामदेवऋषिः, अनुष्टुप्छन्दः, श्रीबहुरूपभट्टारको देवता, आत्मनो वाङ्मनः-कायोपार्जितपापनिवारणार्थं चतुर्वर्गसिद्ध्यर्थे पाठे विनियोगः ।

अघोरमन्त्रेण न्यासं कृत्वा प्राणायामः कुर्यात् ।

## अथ ध्यानम्

वामे खेटकपाशशार्ङ्गविलस-
दण्डं च वीणाण्टिके
बिभ्राणं ध्वजमुद्गरौ स्वनिभदे-
व्यङ्कं कुठारं करे ।
दक्षेस्यङ्कुशकन्दलेषुडमरू-
न्वज्रत्रिशूलाभयान्
रुद्रस्थं शरवक्त्रमिन्दुधवलं
स्वछन्दनाथं स्तुमः ।।

## अथ गायत्री

ॐ बहुरूपाय विद्महे कोटराक्षाय धीमहि तन्नोऽघोरः प्रचोदयात् ॥३॥

मूलं

ओम् अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यश्च सर्वतः शर्व सर्वेभ्यो नमस्ते रुद्ररूपेभ्यः ॥१०८॥

ओं नमः परमाकाशशायिने परमात्मने ।
शिवाय परसंशान्तनिरानन्दपदाय ते ॥१॥

अवाच्यायाप्रमेयाय प्रमात्रे विश्वहेतवे ।
महासामान्यरूपाय सत्तामत्रैकरूपिणे ॥२॥

घोषादिदशधाशब्दबीजभूताय शम्भवे ।
नमः शान्तोग्रघोरादिमन्त्रसन्दर्भगर्भिणे ॥३॥

रेवतीसङ्गविस्रम्भसमाश्लेषविलासिने ।
नमः समरसास्वादपरानन्दोपभोगिने ॥४॥

भोगपाणे नमस्तुभ्यं योगीशैः पूजितात्मने ।
द्वयनिर्दलनोद्योगसमुल्लासितमूर्तये ॥५॥

थरत्प्रसरविक्षोभविसृष्टाखिलजन्तवे ।
नमो मायास्वरूपाय स्थाणवे परमेष्ठिने ॥६॥

घोरसंसारसंभोगदायिने स्थितिकारिणे ।
कलादिक्षितिपर्यन्तपालिने विभवे नमः ॥७॥

रेहणाय महामोहध्वान्तविध्वंसहेतवे ।
हृदयाम्भोजसंकोचभेदिने शिवभानवे ॥८॥

भोगमोक्षफलप्राप्तिहेतुयोगविधायिने ।
नमः परमनिर्वाणदायिने चन्द्रमौलये ॥९॥

घोषाय सर्वमन्त्रणां सर्ववाङ्मयमूर्तये ।
नमः सर्वाय शर्वाय सर्वपाशापहारिणे ॥१०॥

रवणाय रवान्ताय नमस्ते रावराविणे ।
नित्याय सुप्रबुद्धाय सर्वान्तरतमाय ते ॥११॥

घोषाय परनान्दान्तश्चराय खचराय ते ।
नमो वाक्पतये तुभ्यं भवाय भवभेदिने ॥१२॥

रमणाय रतीशाङ्गदाहिने चित्रकर्मणे ।
नमः शैलसुताभर्त्रे विश्वकर्त्रे महात्मने ॥१३॥

तमःपारप्रतिष्ठाय सर्वान्तपद्माय ते ।
नमः समस्ततत्त्वाध्वव्यापिने चित्स्वरूपिणे ॥१४॥

पतगाय ते

रेवद्वराय रुद्राय नमस्ते रूपरूपिणे ।
परापरपरिस्पन्दमन्दिराय नमो नमः ॥१५॥

भरिताखिलविश्वाय योगिगम्याय योगिने ।
नमः सर्वेश्वरेशाय महाहंसाय शम्भवे ॥१६॥

चर्च्याय चर्चनीयाय चर्चकाय चरायते ।
रवीन्दुसन्धिसंस्थाय महाचक्रेश ते नमः ॥१७॥

सर्वानुस्यूतरूपाय सर्वाच्छादकशक्तये ।
सर्वभक्षाय शर्वाय नमस्ते सर्ववेदिने ॥१८॥

रम्याय वल्लभाक्रान्तदेहार्धाय वियोगिने ।
नमः प्रपन्नदुष्प्रापसौभाग्यफलदायिने ॥१९॥

तन्महेशाय तत्त्वार्थवेदिने भवभेदिने ।
महाभैरवनाथाय भक्तिगम्याय ते नमः ॥२०॥

शक्तिगर्भप्रबोधाय शरण्यायाशरीरिणे ।
शान्तिपुष्टचादिसाध्यार्थसाधकाय नमोऽस्तु ते ॥२१॥

रवत्कुण्डलिनीगर्भप्रबोधप्राप्तशक्तये ।
उत्स्फोटनापटुप्रौढ़परमाक्षरमूर्तये ॥२२॥

समस्तव्यस्तसंग्रस्तरश्मिजालोदरात्मने ।
नमस्तुभ्यं महामीनरूपिणे विश्वगर्भिणे ॥२३॥

रेवारणिसमुद्भूतवह्निज्वालावभासिने ।
घनीभूतविकल्पात्मविश्वबन्धविलापिने ॥२४॥

भोगिनीस्यन्दनारूढिप्रौढिमालब्धगर्विणे ।
नमस्ते सर्वभक्ष्याय परमामृतलाभिने ॥२५॥

णफकोटिसमावेशभरिताखिलसृष्टये ।
नमः शक्तिशरीराय कोटिद्वितयसङ्गिने ॥२६॥

महामोहमलाक्रान्तजीववर्गावबोधिने ।
महेश्वराय जगतां नमः कारणबन्धवे ॥२७॥

स्तेनोन्मूलनदक्षैकस्मृतये विश्वमूर्तये ।
नमस्तेऽस्तु महादेवनाम्ने परस्वधात्मने ॥२८॥

रुग्द्राविणे महावीर्यरुरुवंशविनाशिने ।
रुद्राय द्राविताशेषबन्धनाय नमोऽस्तु ते ॥२९॥

द्रवत्पररसास्वादचर्वणोद्युक्तशक्तये ।
नमस्त्रिदशपूज्याय सर्वकारणहेतवे ॥३०॥

रूपातीत नमस्तुभ्यं नमस्ते बहुरूपिणे ।
त्र्यम्बकाय त्रिधामान्तश्चरिणे चित्रचक्षुषे ॥३१॥

पेशलोपायलभ्याय भक्तिभाजां महात्मनाम् ।
दुर्लभाय मलाक्रान्तचेतसां तु नमो नमः ॥३२॥

भवप्रदाय दुष्टानां भवाय भवभेदिने ।
भव्यानां तन्मयानां तु सर्वदाय नमो नमः ॥३३॥

अणूनां मुक्तये घोरघोरसंसारदायिने ।
घोरातिघोरमूढानां तिरस्कर्त्रे नमो नमः ॥३४॥

सर्वकारणकलापकल्पितो-
ल्लाससंकुलसमाधिविष्ठराम् ।
हार्दकोकनदसंस्थितामपि
तां प्रणौमि शिववल्लभामजाम् ॥१॥

सर्वजन्तुहृदयाब्जमण्डलो-
द्भूतभावमधुपानलुम्पटाम् ।
वर्णभेदविभवान्तरस्थितां
तां प्रणौमि शिववल्लभामजाम् ॥२॥

इत्येवं स्तोत्रराजेशं महाभैरवभाषितम् ।
यौगिनीनां परं सारं न दद्याद्यस्य कस्यचित् ॥१॥

अदीक्षिते शठे क्रूरे निःसत्ये शुचिवर्जिते ।
नास्तिके च खले मूर्खे प्रमत्ते विप्लुतेऽलसे ॥२॥

गुरुशास्त्रसदाचारदूषके कलहप्रिये ।
निन्दके चुम्भके क्षूद्रेऽसमयज्ञे च दांभिके ॥३॥

दाक्षिण्यरहिते पापे धर्महीने च गर्विते ।
भक्तियुक्ते प्रदातव्यं न देयं परदीक्षिते ॥४॥

पशूनां सन्निधौ देवि नोच्चार्यं सर्वथा क्वचित् ।
अस्य स्मृतिमात्रेण विघ्ना नश्यन्त्यनेकशः ॥५॥

गुह्यका यातुधानाश्च वेताला राक्षसादयः ।
डाकिन्यश्च पिशाचाश्च क्रूरसत्त्वाश्च पूतनाः ॥६॥

नश्यन्ति सर्वे पठितस्तोत्रस्यास्य प्रभावतः ।
खेचरी भूचरी चैव डाकिनी शाकिनी तथा ॥७॥

ये चान्ये बहुधा भूता दुष्टसत्त्वा भयानकाः ।
व्याधिदौर्भिक्षदौर्भाग्यमारिमोहविषादयः ॥८॥

गजव्याघ्राश्च ये घोरा पलायन्ते दिशो दश ।
सर्वे दुष्टाः प्रणश्यन्ति चेत्याज्ञा पारमेश्वरी ॥९॥

इति श्रीललितस्वच्छन्दे
बहुरूपगर्भस्तोत्रराजः संपूर्णः ।

इति शिवम् ।

अथ

# मखनलालकोकिलविरचिता
# श्रीपादुकापुष्पमाला ।

ॐ

## श्रीगुरवे नमः

मद्धृत्स्थं सुभगाकारं सर्वसौख्यकरं परम् ।
भवतापहरं शूरं वरेण्यं विदुषां मतम् ॥१॥
महनीयाकृतिं देवं श्रीगुरुं परमं विभुम् ।
लक्ष्मणं लक्षणैर्युक्तं प्रणौमि सर्वदं सदा ॥२॥
[युगलकं]

दासोऽहमस्मि मूढोऽहं त्वद्दयावञ्चितः खलु ।
कृपाकटाक्षपूरैस्त्वं पूरय विरसं मनः ॥३॥

दर्शं दर्शं भवद्रूपं तृण्मदीया न शाम्यति ।
श्रावं श्रावं भवत्कीर्तिं शुश्रूषा नापक्षीयते ॥४॥

स्मारं स्मारं भवन्नाम जिगीषा नापचीयते ।
पायं पायं भवद्वाक्यं मत्पिपासा प्रवर्धते ॥५॥

कौलाख्ये शैवशास्त्रे यः विग्रहीव कलौ युगे ।
सन्तारयति ज्ञानस्य पोतेन शरणागतान् ॥६॥

अवाप्तुकामो भवदाश्रयं हि
विषण्णचेता विभवाब्धिमग्नः ।
त्वत्पूतपादाब्जपरागकांक्षी
द्वारे तव प्राञ्जलिरागतोऽस्मि ॥७॥

धुनोति वायुर्हि यथा महीरुहान्
इयं तथा दुष्प्रकृतिर्मनुष्यान् ।
परं भवद्दर्शनवातपालितान्
नरान् समर्थोऽस्ति न कोऽपि धर्षितुम् ॥८॥

अल्पज्ञान् कुजनान् धीमान्
कौलाचारविवर्जितान् ।
नवाभिनवकैर्भावैः
प्रपूरयति मद्गुरुः ॥९॥

त्वद्वाक्यतन्त्र्योद्यतरम्यनादैः
मनोज्ञभावैः रसपूरितं सत् ।
स्वान्तं मदीयं रसभावहीनं
प्राप्नोत्यनाख्यां स्थितिमद्वितीयाम् ॥१०॥

भवत्पदाब्जेन मनाक् स्पृष्टे
मलं त्रिधा द्रागपयाति कुत्र।
जाने न भो कौलिकदेशिकेन्द्र !
एतद्धि सत्यं न मृषा ब्रवीमि ।।११।।

पूतं विविक्तं दशरागवर्जितं
सत्त्वे सुनिष्ठं नयनामृतं परम् ।
स्वतन्त्रविद्वज्जनवृन्दवन्दितं
गुरुं दयार्द्रं प्रणमामि नित्यम् ।।१२।।

स्मृतौ निमग्नः विरहातुरस्त्वहं
लेभे न शांति न सुखं न निद्राम् ।
निकामपानीययुतां न कोऽपि
हित्वा नदीं सञ्जति तृष्णिकायाम् ।।१३।।

तव भक्तिसुधाहीना दशा न मां सुखावहा।
मधुकुम्भे महालब्धे द्राक्षेहा नोपजायते ।।१४।।

न भोगविभवं कांक्षे न सुखं नार्थसञ्चयः।
परमेका भवद्भक्तिरस्तु मे सर्वसौख्यदा ।।१५।।

सुदर्शनः सदास्तु मामनन्तानन्दवर्धकः।
संविन्मार्गो भवत्प्राप्तिसाधकः त्रिगुणात्मकः ।।१६।।

नासीनस्य न सुप्तस्य भ्रमतो नोत्थितस्य न ।
त्वामन्तरा शमो नास्ति दिवा रात्रौ च जाग्रतः ॥१७॥

कठोरः कोमलांगोऽसि दुर्धषः सुलभोऽसि त्वम् ।
उग्रः शान्तस्वभावोऽसि दाने रतोऽसि निर्मदः ॥१८॥

बर्भर्ति भक्तान् स्वस्नेहधारया
जर्हर्ति दुष्टान् भवभक्तिबाधकान् ।
विभूतिसुसिद्धिसमृद्धियुक्तान्
चर्कर्ति लोकान् स्वकृपाकटाक्षैः ॥१९॥

समानभावेन समानप्रीत्या
समत्वयोगी समताप्रचारकः ।
सर्वान् शरण्य शरणागताञ्च
कारुण्यभावेन समीक्षसे त्वम् ॥२०॥

त्वग् मज्जास्थि हृदि व्याप्तं जन्मान्तरैरुपार्जितम् ।
तत्सर्वं नाशयत्वीश ! यदघौघं मया कृतम् ॥२१॥

एकविंशतिपुष्पाणां
कोकिलेन कृता मया ।
माला श्रीगुरुदेवस्य
लक्ष्मणस्य प्रसादये ॥

इति श्रीमखनलालकोकिलविरचिता
श्रीपादुकापुष्पमाला ।
इति शिवम्

ॐ

# श्रीगुरवे शिवाय नमः

अस्त्यस्मिन्महसां महानिधिरसौ
देवो विवस्वान् महान्
यस्मिञ्जाग्रति जाग्रतीव रजनी-
सुप्ता इमे जन्मिनः ।
किन्त्वेका महती ततो विजयते
श्रीदैशिकाङ्घ्रिद्युति-
र्यद्भासाच्छुरितं चिरन्तनतमो
हित्वैव जागर्ति सत् ॥१॥

ऊर्जस्य शुक्ले च तिथौ चतुर्थ्यां
जगज्जिगीषून् स्वत ऊर्जयन्तः ।
आविर्बभूवुर्महतावकाशाः
काश्मीरकण्डाभिधजन्मभूमौ ॥२॥

येऽस्माननेकानभिधाय दिव्यं
ज्ञानञ्च जग्मुर्निजधाममध्ये ।
तपस्य शुक्लस्य तिथौ द्वितीये
सूर्याब्जयोः सन्धिमयेऽप्यनेहसि ॥३॥

अद्यापि येऽस्मानभिबोधयन्ति
प्रयाणरूपेण निजेन कर्मणा ।
प्रकाशरूपप्रथितैकधाम्नि
रवीन्दुमध्ये जहतः शरीरम् ॥४॥

यज्जमना शर्मणगोष्यवात्स्य-
गोत्रं तथागोत्रमवापि लोके ।
अभ्युन्नतिं लोकहितैकहेतुं
सर्वासु दिक्षु प्रसरत्प्रभावाम् ॥५॥

तानद्य सर्वे वयमाविशन्तो
गुरून्स्मरन्तो मनसाथ वाचा ।
विशुद्धभक्त्या प्रणता नमामः
स्थिताञ्च ज्ञानप्रभयागतानपि ॥६॥

तज्ज्ञानगोत्रे गुरवश्चकासति
ज्ञानप्रभाभिः प्रसृताभिरद्य ।
श्रीलक्ष्मणाख्या नमतां जनानां
दृष्ट्यैव दृष्टेस्तमसां विघातकाः ॥७॥

गुरुशिष्यस्वरूपेण
दृश्यते यद्यपि द्विधा ।

तथापि श्रीगुरुः साक्षा-
देक एव विराजते ।।८।।

इति श्रीरामेश्वराचार्यवर्यनिर्मितानि
पद्यानीति शिवम् ।

---

# भाव-पोश

## नमो नमः श्रीगुरुपादुकाभ्याम्

सद्गुरु म्यानि रोज़तम दयाये
भाव पोश लागह्य पादुकाये।

आइसय शरण भोज़तम ज़री
पादिकमलन लगह्य परी।
करत वुन्य म्यन शुद्ध वासनाये॥
भाव पोश लागह्य पादुकाये।

शंकररुप युस छुय सुन्दरय
बासतम गरि गरि मनि अन्दरय
यह्य करतम पूर कामनाये॥
भाव पोश लागह्य पादुकाये।

वह्यिक गट् पछि बश दिव्युतुथ दर्शुन
ओसुय ज़गतस पापभार कासुन।
चानि यिन गाश आव जायि जाये॥
भाव पोश लागह्य पादुकाये।

भागिवान माजि दियतुनय ज़नमय
होवथस भगवद्रुप पनुनुय।
स्वर्गस मंज करथस जाये॥
भाव पोश लागह्य पादुकाये।

माता च्यन्य क्या ग्रस भाग्यवान
ज़नमस यस निश ग्राव भगवानः
जयजयकार छु तस श्री मातायेे ।।०
भाव पोश लागह्य पादुकाये ।

ज़नमस ग्राख चय राज़पोत्रय
पंपोशि रुप छिय यिम नेत्रय
गट् चजि गाश ग्राव चानि शोभाये ।।०
भाव पोश लागह्य पादुकाये ।

चानि यिन सोरुय जगत गव शाद
रामजुवन दियुतनय ग्राशींवाद
भक्तिभाव चोनुय छु जायि जाये ।।०
भाव पोश लगाह्य पादुकाये ।

महताब काकन्य करथ भक्ति
दिच़नय तम्य बड़ गुरुशक्ति
भक्तित्यन हुन्द करान छुखच़ पाये ।।०
भाव पोश लागह्य पादुकाये ।

घरि यलि द्राख राज़सी त्रविथ
ईश्वर पर्वत ग्राश्रम बनोवुथ
जय जय कार चानि लीलाये ।।०
भाव पोश लागह्य पादुकाये ।

यि सुन्दर आश्रम छु निशातय
दर्शुन दितम् म्य सात सातय
प्राण म्यनि अर्पण अथ सुन्दर जाये ॥०
भाव पोश लागहय पादुकाये।

गाशि रोस छस आश छम च्यनी
भक्ती दितम छय विनती म्यनी
क्या कम गछि चानि भारगाये ॥०
भाव पोश लागहय पादुकाये।

दयादृष्टि यस छुख त्रावान
पापव छहन सुय मुकलावान
म्यति करत पापन मुॅकलनपाये ॥०
भाव पोश लागहय पादुकाये।

प्रारान छस चनिस बरस तल
करत म्यनी मुशिकिल वुन्य हल
मुर्खभाव छुम रोज़तम दयाये ॥०
भाव पोश लागहय पादुकाये।

अन्तर्यमी छुख पानय
सारिनय हँदि दुःख ज़ानानय
अनुग्रह चोनुय छु जायि जाये ॥०
भाव पोश लागहय पादुकाये।

गाशरोस छस वथ हावनस न कांह
चानि उपदेशि रोस ब. कर क्याह
करतम कृपा नत छम निराशाये ॥०
भाव पोश लागह्य पादुकाये।

हरिद्वार ह्वथ कृष्ण लीला
बेयि सुदोह् ग्रसि वुन्य मेल्या
छस ब प्रारान तथ लीलाये ॥०
भाव पोश लागह्य पादुकाये।

पादिकमल च्यन यलि सोन घर चाय
कोरुथ ग्रसि पापन मुकलन पाय
गयि दूर विपदा चानि कृपाये ॥०
भाव पोश लागह्य पादुकाये।

च्यानि पादुका दर्शन शान्ति यिवान
भाग्यिवान तिम छि यिम दोह्य पूज़ान
सद्गुरु भक्तत्यन हन्दि साये ॥०
भाव पोश लागह्य पादुकाये।

शारिका दीवी छ पान ज़नी
रात दिन करान पूज़ा च्यनी
पम्पोश लागह्स पूज़ाये
भाव पोश लागह्य पादुकाये।

जन्म दिन दोह् यलि दर्शुन दिवान
तीज़सुस्त रुप, भगवान प्रज़लान
भक्तत्यन दर्शुन दिवान पज़िमाये
भाव पोश लागहय पादुकाये।

यिम भक्तय आश्रम दूर आसान
तिमन् तती अनुग्रह छुख करान
अनुग्रह चोनुय छु जायि जाये
भाव पोश लागहय पादुकाये।

छुख च़ सारिनय निशी छुखन कंसी निशी
छय दया यिवान सारिनय हज़ं हिशी
भक्त रक्षक शैव रुपाये॥
भाव पोश लागहय पादुकाये।

कमलावती छस ज़री करान
रोज़तम हरदम कृपा करान
क्या हयक लिखिथ ब पननि मूर्खताये।
भाव पोश लागहय पादुकाये।

---

